भवतीति भावः, एतेन सिद्धादिगुणेषु 'सिद्धे नदीहे न हस्से' इत्यादिना दीर्घत्वादीनां कृतः प्रतिषेधोऽपि पूर्वाकारापेक्षया संस्थानस्यानित्थंस्थत्वात् अवसेयः, न तु सर्वथा संस्थानस्याभावात् इति सिद्धम्। तथाचोक्तं भाष्यकृता—'सुसिरपरिपूरणाओ पुव्वागारन्नहाववत्थाओ। संठाणमणित्थंत्थं जं भणियं भणिययागारं ॥१॥ एत्तोच्चिचव पडिसेहो सिद्धाइगुणेसु दीहयाईणं। जयणित्थंत्थं पुव्वागाराविक्खाए नाभावो" ॥२॥ शुशिरपरिपूरणात् पूर्वाकारान्यथा व्यवस्थातः। संस्थानमनित्थंस्थं तद् भणितमनियताकारात् ॥१॥ इत एव प्रतिषेधः सिद्धादिगुणेषु दीर्घत्वादीनाम्। यदनित्थं स्थं पूर्वाकारापेक्षया नाभावः ॥२॥ इति अथोक्तसिद्धानां देशभेदादिना अवस्थानम् प्ररूपयति—जत्थ य एगो सिद्धो तत्थ अणंता भवक्खयविमुक्का। अन्नोऽन्नसमोगाढा पुट्ठा सव्वेवि लोगंते ॥१५८॥

---

के कारण शरीर का पहले वाला आकार बदल जाता है, इस कारण सिद्धों का संस्थान अनित्थंस्थ कहा गया है। संस्थान की इस अनियतता के कारण, आगम में यह जो कहा गया है कि सिद्धात्मा 'न दीर्घ हैं, न ह्रस्व है' आदि, वह कथन भी संगत हो जाता है। सिद्धों में संस्थान का सर्वथा अभाव नहीं है। भाष्यकार ने कहा है—छिद्रों के परिपूर्ण हो जाने के कारण पूर्व का आकार अन्यथा हो जाने से सिद्धों का संस्थान अनित्थंस्थ अर्थात् अनियम कहा गया है। इसी कारण सिद्धों में दीर्घत्व, ह्रस्वत्व आदि का अभाव कहा गया है। सिद्धों के आकार की अनियतता पूर्वाकार की अपेक्षा से है, आकार का अभाव होने के कारण नहीं।

अब जीवों के स्थिति के विषय में कथन करते हैं—जहां एक सिद्ध स्थित है वहां अनन्त सिद्ध होते हैं। क्यों कि वे सभी भव का क्षय

---

(છિદ્રો) ભરાઈ જવાના કારણે શરીરનો આગળનો આકાર બદલાઈ જાય છે. એ કારણે સિદ્ધોના સંસ્થાન અનિત્થંસ્થ કહ્યાં છે સંસ્થાનની આ અનિયતતા ને કારણે આગમમાં જે કહ્યું છે કે સિદ્ધાત્મા ન દીર્ઘ છે ન હ્રસ્વ છે વિ. એ કથન પણ સંગત થઈ જાય છે. સિદ્ધોમાં સંસ્થાનનો સર્વથા અભાવ નથી. ભાષ્યકારે કહ્યુ છે-છિદ્રો પરિપૂર્ણ થઈ જવાને કારણે પૂર્વનો આકાર બદલાઈ જવાથી સિદ્ધોના સંસ્થાન અનિત્થંસ્થ અર્થાત્ અનિયત કહેલાં છે એ કારણે સિદ્ધોમાં દીર્ઘત્વ, હ્રસ્વત્વ આદિનો અભાવ કહેલો છે. સિદ્ધોના આકારની અનિયતતા પૂર્વાકારની અપેક્ષાએ છે; આકારનો અભાવ હોવાનુ કારણ નથી.

હવે સિદ્ધ જીવોની સ્થિતિના વિષયમાં કથન કરે છે-જ્યાં એક સિદ્ધ સ્થિત છે, ત્યાં અનન્ત સિદ્ધ સ્થિત હોય છે. કેમકે તેઓ બધા ભવનો

यत्र च यस्मिन्नेव देशे, एकः सिद्धो निष्पन्नस्तत्र अनन्ता भवक्षयविमुक्ताः संसारबन्धनिर्मुक्ताः सिद्धाः तिष्ठन्ति, अत्र भवक्षयग्रहणेन यथेच्छभवावतरण-शक्तिशालिसिद्धानां व्यवच्छेदो बोध्यः, अन्योन्यसमवगाढाः भवन्ति तथाविध-विचित्रपरिणामस्वभावत्वात् धर्मास्तिकायादिवत् तथा स्पृष्टाः संलग्नाः सर्वेऽपि लोकान्ते 'फुसइ अणंते सिद्धे सव्वपएसेहिं नियमसो सिद्धा । तेऽवि य असंखिज्ज-गुणा देसपदेसेहिं जे पुट्ठा' स्पृशति अनन्तान् सिद्धान् सर्वप्रदेशैः आत्मसम्बन्धिभिः नियमतः सिद्धः तेऽपि च सिद्धाः सर्वप्रदेश स्पृष्टेभ्योऽसंख्येयगुणा वर्तन्ते ये देशप्रदेशैः स्पृष्टा भवन्ति, अथ सिद्धानां लक्षणं प्ररूपयति 'असरीरा जीवघणा उव-उत्ता दंसणे य नाणे य । सागारमणागारं लक्षणमेयंतु सिद्धाणं ॥१६०॥ अशरीरा-अविद्यमानशरीराः अशरीराः औदारिकादि पञ्चविधशरीररहिताः, जीवघनाः-

---

करके विमुक्त हो चुके हैं। वे परस्पर में अवगाढ रहते हैं। अमूर्त्तिक होने के कारण उनको एक दूसरे में अवगाहना होने में कोई बाधा नहीं पडती। जैसे धर्मास्तिकाय, अधर्मास्तिकाय, आकाशास्तिकाय एक दूसरे से मिले हुए लोक में अवस्थित हैं, उसी प्रकार अनन्त सिद्ध परस्पर में मिले हुए अवस्थित हैं। वे सभी सिद्ध लोकान्त भाग से स्पृष्ट रहते हैं।

नियम से अनन्त सिद्ध सर्व प्रदेशों से स्पृष्ट रहते हैं, अर्थात् अनन्त सिद्ध ऐसे हैं जो पूर्ण रूप से एक दूसरे में मिले हुए हैं। और जिनका स्पर्श देश-प्रदेश से है ऐसे सिद्ध तो उनसे भी असंख्यात गुणा अधिक हैं।

अब सिद्धों के स्वरूप का प्रतिपादन किया जाता है-श्री सिद्ध भगवान् औदारिक आदि पांचों शरीर से रहित हैं। जीवघन हैं अर्थात् मुख

---

ક્ષય કરીને વિમુક્ત થઈ ગએલા છે. તેઓ પરસ્પરમા અવગાઢ રહે છે. અમૂર્તિક હોવાને કારણે તેઓની એક બીજામાં અવગાહના થવામાં કોઈ વાંધો નથી પડતો. જેમ ધર્માસ્તિકાય અધર્માસ્તિકાય, આકાશાસ્તિ કાય એક બીજામા મળેલાને લોકમાં રહેલા છે. એજ પ્રકારે અનન્ત સિદ્ધ પરસ્પરમાં મળીને અવસ્થિત છે. તે બધા સિદ્ધો લોકાન્ત ભાગથી સ્પૃષ્ટ રહે છે.

નિયમથી અનન્ત સિદ્ધ સર્વ પ્રદેશોથી સ્પૃષ્ટ રહે છે, અર્થાત્ અનન્ત સિદ્ધ એવા છે જે પૂર્ણ રૂપથી એક બીજામાં મળેલા છે. અને જેનો સ્પર્શ દેશ-પ્રદેશથી છે, એવા સિદ્ધો તો તેમનાથી પણ અસંખ્યાત ગણા અધિક છે.

હવે સિદ્ધના સ્વરૂપનું પ્રતિપાદન કરાય છે. સિદ્ધ ભગવાન્ ઔદારિક આદિ પાંચ શરીરોથી રહિત છે. જીવઘન છે અર્થાત્ મુખ ઉદર આદિ છિદ્રોના

जीवाश्च ते घनाश्चेति जीवघनाः मुखकुक्षिप्रभृतिरन्ध्रपूरणात् जीवघना व्यपदिश्यन्ते अयोघनवत् उपयुक्ताः दर्शने-केवलदर्शने, ज्ञाने च केवलज्ञाने, तत्र सामान्यविषयं दर्शनम्, विशेषविषयं ज्ञानमित्याशयः, ततः साकारानाकारं सामान्यविशेषोपयोगरूपमित्यर्थः, तत्र साकारं केवलज्ञानोपयुक्तम् अनाकारं केवलदर्शनोपयुक्तम्, सिद्धानामेतत्तुलक्षणम्-तन्मात्रवृत्तिरूपम् लक्षणमवसेयम्, अथ केवलज्ञानकेवलदर्शनयोः सर्वविषयतां प्ररूपयति-केवलनाणुवउत्ता जाणंता सव्वभावगुणभावे । पासंता सव्वओ खलु केवलदिट्ठिहिऽणंताहिं ॥१६१॥ केवलज्ञानोपयुक्ताः केवलज्ञानेन उपयुक्तान्नतु अन्तःकरणेन तेषामन्तःकरणाभावात्, इति केवलज्ञानोपयुक्ताः जानन्ति सर्वभावगुणभावान्-सर्वपदार्थगुणपर्यायान, तत्र सहवर्तिनो गुणा उच्यन्ते, क्रमवर्तिनः पर्याया उच्यन्ते, तथा पश्यन्ति सर्वतः खलु-निश्चयेन,

उदर आदि रंध्रों के भर जाने के कारण सघन आत्मप्रदेशों वाले हैं। सामान्य धर्म को विषय करने वाले केवल दर्शन के तथा विशेष धर्मों को जनने वाले केवलज्ञाक के सदैव रहने वाले उपयोग से उपयुक्त रहते हैं। ज्ञान साकार अर्थात् विशेष विषयक और दर्शन निराकार अर्थात् सामान्य विषयक होता है। यह सिद्धों का लक्षण कहा गया है।

सिद्ध भगवन्त केवलज्ञान के उपयोग से समस्त पदार्थों के गुणों और पर्यायों को जानते हैं। और अनन्त केवलदर्शन से समस्त पदार्थों को देखते अर्थात् उनके सामान्य स्वरूप को जानते हैं। गुण सहवर्त्ती और पर्याय क्रमवर्त्ती होते हैं। इनको वे केवलज्ञान-दर्शन से ही जानते हैं, अन्तःकरण आदि से नहीं, क्यों कि वे अन्तःकरण आदि से रहित हैं। 'केवलदिट्ठीहिऽणंताहिं' यहां बहुवचन देने का

ભરાઇ જવાના કારણે સઘન આત્મ પ્રદેશોવાળા છે. સામાન્ય અર્થને વિષય કરવાવાળા કેવળ દર્શનના તથા વિશેષ ધર્મોના જાણવાવાળા કેવળ જ્ઞાનમાં સદૈવ રહેવાવાળા ઉપયોગથી ઉપયુક્ત રહે છે. જ્ઞાન સાકાર અર્થાત્ વિશેષ વિષયક અને દર્શન નિરાકાર અર્થાત્ સામાન્ય વિષયક હોય છે. આ સિદ્ધોના લક્ષણ કહેલાં છે.

સિદ્ધભગવન્ત કેવળજ્ઞાનના ઉપયોગથી સમસ્ત પદાર્થોના ગુણો અને પર્યાયોને જાણે છે અને અનન્ત કેવલદર્શનથી સમસ્ત પદાર્થોને દેખે છે અર્થાત્ તેમના સામાન્ય સ્વરૂપને જાણે છે. ગુણસહવર્તી અને પર્યાય ક્રમવર્તી હોય છે. તેઓને તે કેવળજ્ઞાન-દર્શનથી જ જાણે છે, અન્ત કરણ આદિથી નહીં, કેમકે તેઓ અન્તઃકરણ આદિથી રહિત છે. 'केवलदिट्ठिहिऽणंताहिं' અહિં બહુવચન આપવાનું કારણ એ છે કે અનન્ત સિદ્ધોના કેવળદર્શન પણ અનન્ત જ છે.

केवलदृष्टिभिरनन्ताभिः अनन्तैः केवलदर्शनैरित्याशयः, सिद्धानामनन्तत्वेन केवलदर्शनानामनन्तत्वात्, अथ सिद्धानां निरतिशयसुखशालित्वं प्ररूपयति-'नवि अत्थि माणुसाणं तं सुक्खं नवि य सव्वदेवाणं। जं सिद्धाणं सुक्खं अव्वाबाहं उवगयाणं' ॥१६२॥ नैवास्ति मनुष्याणां चक्रवर्त्यादीनामपि तत्सौख्यम्, नापि च नैव किलास्ति सर्वदेवानाम् अनुत्तरौपपातिकपर्यन्तानामपि, यत् सिद्धानाम् सौख्यम् अव्याबाधामुपगतानाम्, अविद्यमाना विविधाऽऽबाधा अव्याबाधा, ताम् उपगतानाम् प्राप्तानाम् सिद्धानां निरूपमं सौख्यमिति भावः, 'सुरगणसुहं समत्तं सव्वद्धापिंडियं अणंतगुणं नवि पावइ' मुत्तिसुहं णंताहिं वग्गवग्गूहिं' ॥१६३॥ सुरगणसुखं समस्तं सर्वाद्धा पिण्डितम् सर्वकालसमयगुणितम् अनन्तगुणम् भवति

कारण यह है कि अनन्त सिद्धों के केवलदर्शन भी अनन्त ही हैं।

अब यह निरूपण करते हैं कि सिद्ध भगवान् सुख के स्वामी हैं-सब प्रकार की बाधा-पीडा से रहित होने के कारण सिद्धों को जो सुख होता है, वह चक्रवर्त्ती आदि मनुष्यों को भी नहीं होता। यही नहीं, वैसा सुख सर्वार्थसिद्ध पर्यन्त सभी देवों को भी नहीं होता।

देव-गणों का जो सुख है उस सब का सम्पूर्ण काल के समयों के साथ यदि गुणाकार कर दिया जाय और उसको फिर अनन्त गुणा कर दिया जाय, अनन्त वर्गों से वर्गित कर दिया जाय, तो भी वह सुख मुक्ति के सुख के बराबर नहीं हो सकता।

प्रकारान्तर से यही कथन पुनः दोहराते हैं-सिद्ध जीव प्रत्येक समय में जिस सुख का अनुभव करते हैं, उसे कदाचित् एकत्र करके पिण्डित कर दिया जाय और अनन्त वर्गमूलों से उसे कम किया जाय तो कम किया हुआ वह सुख भी इतना अधिक होगा कि

હવે તે નિરૂપણ કરે છે કે સિદ્ધ ભગવન સુખના સ્વામી છે-બધી જાતની પીડાથી રહિત હોવાના કારણે સિદ્ધોને જે સુખ થાય છે, તે ચક્રવર્તી આદિ મનુષ્યોને પણ થતું નથી. એટલું જ નહિ, એવું સુખ સર્વાર્થ સિદ્ધ પર્યન્ત બધા દેવોને પણ નથી હોતુ.

દેવ ગણોનું જે સુખ છે કે બધાનુ સમ્પૂર્ણ કાળના સમયની સાથે જો ગુણાકાર કરાય અને તેને ફરીથી અનન્ત ગુણા કરાય તો પણ તે સુખ મુક્તિના સુખની બરાબરી નથી કરી શકતું.

પ્રકારાન્તરે એજ કથન પુનઃકરી કહે છે-સિદ્ધ જીવ પ્રત્યેક સમયમાં જે સુખનો અનુભવ કરે છે તેને કદાચ એકત્ર કરીને મેળવી દેવામાં આવે અને અનન્ત વર્ગ મૂલથી તેને ઓછું કરાય તો ઓછું કરાયેલું તે સુખ પણ એટલું

तथापि नापि नैव तुलनया प्राप्नोति मुक्तिसुखम् सिद्धिसुखम् अनन्तैः वर्गवर्गैश्च, अनन्तैः वर्गैः वर्गितम्, तदेव प्रकारान्तरेण प्रतिपादयति–'सिद्धस्स सुहो रासी सव्वद्धा पिंडिओ जइ हवेज्जा। सोऽणंतवग्गभइओ सव्वागासे न माइज्जा ॥१६४॥ सिद्धस्य सुखराशिः सर्वाद्धा पिण्डतो यदि भवेत्। सोऽनन्तवर्गभक्तः–सर्वाकाशे न माति, सर्वथा साद्यपर्यवसितया अद्धया कालेन यत्सुखं सिद्धः प्रतिसमयमनुभवति तदेकत्र पिण्डीकृतम् यदि भवेत् अनन्तैर्वर्गमूलैरपवर्तितम् एतावन्मात्रमपि स यदा सर्वाकाशे न माति तदा किमुत वक्तव्यम् सर्वं सिद्धिसुखम् इत्याशयः, अथ तस्यैव निरुपमत्वं प्रतिपादयति–'जहणाम कोइ मिच्छो नगरगुणे बहुविहे वियाणंतो न चएइ परिपरिकहेउं उवमाए तहिं असंतीए' ॥१६५॥ यथा नाम कश्चित् म्लेच्छो नगरगुणान्–गृहवास प्रभृतीन्, बहुविधान्–अनेकप्रकारान् विजानन् वनं गतः सन् अन्यम्लेच्छेभ्यो न शक्नोति परिकथितुम्, उपमायां तत्र अस-

---

सम्पूर्ण आकाश में नहीं समाएगा।

सिद्धों का सुख वास्तव में वचनागोचर है। उसका प्रतिपादन करना संभव नहीं है, यह बतलाते हैं–जैसे कोई म्लेच्छ अर्थात् अनार्य जंगली पुरुष गृहोवास आदि नगर संबंध बहुत प्रकार के गुणों को जान–देख कर वन में गया। अन्य म्लेच्छों के पूछने पर वह उनका बखान करने में समर्थ नहीं होता अर्थात् अनुभव करता हुआ भी कह नहीं सकता, क्यों कि उसकी कोई उपमा उसके सामने नहीं है। इसी प्रकार सिद्धों का सुख अनुपम है। उसकी कोई उपमा नहीं है। फिर भी बाल जीवों को बोध कराने के लिए उस अमन्द आनन्द

---

અધિક થશે કે સંપૂર્ણ આકાશમાં નહીં સમાય.

સિદ્ધોના સુખ વાસ્તવમાં વચનાગોચર છે. તેનું પ્રતિપાદન કરવું અસંભવિત નથી- એ બતાવે છે–જેમ કોઈ મ્લેચ્છ અર્થાત્ અનાર્ય જંગલી માણસ ગૃહવાસ આદિ નગર સંબધી ઘણા પ્રકારના ગુણોને જાણી અને જોઈને વનમાં ગયો. બીજા મ્લેચ્છોએ પૂછી જોતાં તે તેના વખાણ કરવામા સમર્થ નથી થતો અર્થાત્ અનુભવ કરવા છતાં પણ કહિ નથી શકતો, કેમકે તેની કોઇ ઉપમા તેની સામે હોતી નથી. એ પ્રકારે સિદ્ધોના સુખ પણ અનુપમ છે. તેમની કોઈ ઉપમા નથી.

તો પણ બાલ જીવોને બોધ કરાવવા માટે તે અમંદ આનંદ સમૂહના

स्याम्, तत्र उपमाया असद्-भावात्, 'इय सिद्धाणं सोक्खं अणोवमं नत्थि तस्स ओवम्मं। किंचि विसेसे णित्तो सारिक्खमिणं सुणह वोच्छं ॥१६६॥ इदं सिद्धानां सौख्यम् अनुपमम् वर्तते, नास्ति तस्य सिद्धासुखस्य, औपम्यम्, तथापि बालावबोधाय किञ्चिद् विशेषेण, इतः अस्य अमन्दानन्दसन्दोहरूपस्य सिद्ध-सुखस्य सादृश्यमिदं वक्ष्यमाणं शृणुत मया वर्ण्यते-'जह सव्वकामगुणियं पुरिसो भोत्तूण भोयणं कोई। तण्हा छुहा विमुक्को अच्छिज्जजहा अमियतित्तो ॥१६७॥ यथा भोजनं सर्वकामगुणितं सकलोपस्कारोपस्कृतम्, सात्त्विकसर्वप्रकारव्यञ्ज-नोपेतं सर्वोत्तमद्रव्यनिर्मितं किं बहुना निरुपमं, कोऽपि पुरुषो भुक्त्वा तृट्क्षुद्-विप्रमुक्तः तृषाक्षुधारहितः सन् अमृततृप्तो भवति तथा-'इय सव्वकालतित्ता अतुलं निव्वाणमुवगया सिद्धा। सासयमव्वाबाहं चिट्ठंति सुही सुहं पत्ता' एवं सर्वकालं तृप्ताः अतुलनिर्वाणमुपगताः सिद्धाः। शाश्वतमव्याबाधं तिष्ठन्ति सुखिनः सुखं प्राप्ताः। अयं भावः-यथा कश्चित् पुरुषः समस्तोपस्कारसंस्कृतं स्वादाति-शयसम्पन्नं सर्वोत्तमं सर्वव्यञ्जनोपेतं सर्वोत्कृष्टं भोजनं कृत्वा क्षुधातृषारहितः सन् अमृततृप्तो भवति तथा निर्वाणं-मुक्तिमुपगताः सिद्धाः सर्वकालम्-साद्य-पर्यवसितं कालं तृप्ताः सर्वथोत्सुकता निवृत्तिलक्षणं परमसन्तोषमुपगताः अतुलम्-अनन्यसदृशं निरुपमत्वात् शाश्वतं प्रतिपाताभावात् अव्याबाधम् लेशमात्रमपि व्या-बाधाया असंभवात् सुखं प्राप्ताः सुखिनस्तिष्ठन्ति इति, तदेव विशदरूपेण प्रति-पादयति-'सिद्धितियबुद्धत्तिय पारगयत्ति य। परंपरगयत्ति उम्मुक्ककम्मकवया अजरा अमरा असंगा य। ॥१६९॥ सिद्धा इति सित्तं-बद्धम्, अष्टप्रकारकम् ज्ञाना-

---

समूह के लिए उपमा दी जा रही है, उसे सुनो! जैसे कोई पुरुष सर्व-काम गुणित अर्थात् सभी प्रकार के मसालों से युक्त, सभी प्रकार के सात्त्विक व्यंजनों से विशिष्ट भोजन करके भूख और प्यास से सर्वथा मुक्त हो जाता है और सुख पूर्वक रहता है, अमृत भक्षण की सी तृप्ति का अनुभव करता है। वैसे ही निर्वाण को प्राप्त सिद्ध जीव सदा काल तृप्त रहते हैं। वे शाश्वत तथा अव्याबाध सुख से युक्त होकर विराजमान रहते हैं।

---

માટે ઉપમા દેવાય છે, તેને સાંભળો જેમ કોઈ પુરૂષ સર્વ કામ ગુણિત અર્થાત્ બધા પ્રકારના મસાલાથી યુક્ત, સર્વ પ્રકારના સાત્વિક વ્યંજનોથી વિશિષ્ટ ભોજન કરીને ભૂખ અને તરસથી સર્વથા મુક્ત થઇ જાય છે અને સુખ પૂર્વક રહે છે. અમૃત ભક્ષણ સરખી તૃપ્તિનો અનુભવ કરે છે. એજ રીતે નિર્વાણને પામેલ જીવ સદાકાળ તૃપ્ત રહે છે. તેઓ શાશ્વત તથા અવ્યાબાધ સુખથી યુક્ત થઇને વિરાજમાન રહે છે.

वरणीयादिकं कर्म सकलं ध्मातं—भस्मराशीकृतं यैस्ते सिद्धाः पृषोदरादित्वात् सिद्ध शब्दनिष्पत्तिः, निर्दग्धीकृतानेकभवकर्मेन्धना इत्यर्थः, ते च 'कम्मे सिप्पे य विज्जाए, मंते जोगे य आगमे। अत्थ जत्ता अभिप्पाए, तवे कम्मक्खए इय' कर्मणि, शिल्पे च विद्यायां मन्त्रे योगे चागमे। अर्थे यात्रायामभिप्राये तपसि कर्मक्षये इति रीत्या कर्मादि सिद्धा अपि भवन्ति, तत्र कर्मादिसिद्धनिरासाय आह—बुद्धा इति केवलज्ञानेन अवगतवस्तुतत्त्वाः अविद्यानिद्राप्रसुप्ते संसारिणि परोपदेशेन जीवादिरूपं तत्त्वं ज्ञातवन्त प्रतिबुद्धाः सर्वज्ञ सर्वदर्शिस्वभावबोधवन्तः कालत्रय ज्ञानवन्तः इत्यर्थः, तेष्वपि संसारमोक्षोभय परित्यागेन स्थितवतां सामान्यसिद्धानां निरासायोक्तम्—पारगताः इति, संसारस्य प्रयोजनसमूहस्य वा पारं गताः पारगताः सीमानमुल्लङ्घितवन्त इत्याशयः, तथा भव्यत्वकल्पित सकल-

वे मुक्त जीव सिद्ध है अर्थात् उन्होंने सित अर्थात् बंधे हुए ज्ञानावरणीय आदि आठों कर्मों को ध्मात अर्थात् दग्ध कर दिया है। सिद्ध कई प्रकार के होते हैं, कहा भी है–'कर्मसिद्ध, शिल्पसिद्ध, विद्यासिद्ध, मंत्रसिद्ध, योगसिद्ध, आगमसिद्ध, अर्थसिद्ध, यात्रासिद्ध, अभिप्रायसिद्ध, तपःसिद्ध और कर्मक्षयसिद्ध।' यहां जिन सिद्धों का वर्णन किया जा रहा है, वे कर्मसिद्ध आदि नहीं किन्तु कर्मक्षयसिद्ध हैं, यह प्रकट करने के लिए गाथा में 'बुद्धा' विशेषण का प्रयोग किया गया है। वे बुद्ध हैं अर्थात् केवल ज्ञान के द्वारा उन्होंने वस्तु के स्वरूप को अवगत (जानना) कर लिया है, परोपदेश के विना ही जीवादि तत्त्वों को जान लिया है अर्थात् वे सर्वज्ञ और सर्वदर्शी हैं, तीनों कालों के ज्ञाता है। अर्हन्त भगवान भी बुद्ध होते हैं, अतएव उनका निराकरण करने के लिए 'पारगताः' विशेषण दिया गया है,

તે મુક્ત જીવ સિદ્ધ છે અર્થાત્ તેઓએ સિત અર્થાત્ બચેલા જ્ઞાનાવરણીય આદિ આઠે કર્મોને ધ્માત અર્થાત્ દગ્ધ કરી દિધાં છે. સિદ્ધ અનેક પ્રકારના હોય છે, કહ્યું પણ છે:–કર્મસિદ્ધ, વિદ્યાસિદ્ધ, મંત્રસિદ્ધ, યોગસિદ્ધ, આગમસિદ્ધ, કર્મક્ષયસિદ્ધ. અહિં જે સિદ્ધોનું વર્ણન થઇ રહ્યું છે તેઓ કર્મસિદ્ધ આદિ નથી પણ કર્મક્ષય સિદ્ધ છે એ પ્રગટ કરવાને માટે ગાથામાં 'બુદ્ધા' વિશેષણનો પ્રયોગ કરાયેલો છે. તેઓ બુદ્ધ છે. અર્થાત્ કેવળજ્ઞાન દ્વારા તેઓએ વસ્તુના સ્વરૂપને અવગત (જાણવું) કરી લિધુ છે. પરોપદેશના વિનાજ જીવાદિ તત્વોને જાણી લીધા છે અર્થાત્ તેઓ સર્વજ્ઞ અને સર્વદર્શી છે; ત્રણે કાળના જ્ઞાતા છે. અર્હન્ત ભગવાન પણ બુદ્ધ હોય છે, તેથીજ તેમનું નિરાકરણ કરવાને માટે 'પારગતા' વિશેષણ આપેલું છે, જેનો આશય એ છે કે

प्रयोजन समाप्त्या निरवशेषकर्तव्येन मुक्ता इत्याशयः एवंविधानामपि अक्रम सिद्धानाम् निरासाय आह–'परम्परागता' इति सिद्धत्वसमयाद् द्वयादि समयवर्तिनः परम्परया दर्शनज्ञानचारित्ररूपया मिथ्यादृष्ट्यविरतसम्यग्दृष्टि देशविरतिप्रमत्ताप्रमत्तनिवृत्त्य निवृत्तिकषायोदयरूपबादरसंपरायसूक्ष्मसंपरायो-पशान्तमोहक्षीणमोहसयोगिकेवल्ययोगिकेवलि गुणस्थानभेदभिन्नरूपया गताः परम्परागताः, तेष्वपि अनुन्मुक्तकर्मकवचानां सामान्यसिद्धानां व्यपोहाय आह उन्मुक्तकर्मकवचाः, उत्–उत्कर्षेण प्रबलतया न पुनर्भवरूपतया मुक्तं–त्यक्तं कर्म कवचमिव कर्मकवचं यैस्ते उन्मुक्तकर्मकवचाः, अतएव अजराः–शरीराभावेन जराया असद्भावात् अमराः–तेषां सिद्धानामायुषोऽभावात् मरणरहिताः शरीर-रहितत्वादेव प्राणत्यागरूपमरणासंभवात्, तथाचोक्तम्–'वयसो हाणीहजरा, प्राण-च्चाओ य मरणमादिट्ठं । सहदेहंमि तदुभयं तदभावे तं न कस्सेव । वयसो हानिरिहजरा प्राणत्यागश्च मरणादिष्टम्, सति देहे तदुभयं तदभावे तन्नकस्यैव,

---

जिसका आशय है कि वे संसार से अथवा प्रयोजनों से पार हो चुके हैं। उनके समस्त प्रयोजन समाप्त हो गए हैं अतएव वे कृतकृत्य हो गए हैं। ऐसे भी जो अक्रम सिद्ध हैं उनका निरास करने के लिए उन्हें 'परम्परागत' कहा है अर्थात् सिद्धत्व के समय से दूसरे आदि समयवर्त्ती हैं। अथवा परम्परागत का अर्थ है अपने योग्य यथा संभव चतुर्थ, षष्ठ आदि गुणस्थानों को पार करके सिद्ध हुए हैं। इसके अतिरिक्त वे कर्म रूपी कवच से पूरी तरह और सदा के लिए मुक्त हो चुके हैं। अतएव अजर हैं, क्यों कि शरीर का अभाव होने से जरा की संभावना ही नहीं है। सिद्ध अमर भी हैं, क्यों कि आयु कर्म से रहित हो चुके हैं, शरीर रहित होने से प्राणत्याग रूप मरण संभव नहीं है। कहा भी है–'वयस् (उम्र) की हानि होना जरा और

---

તેઓ સંસારથી અથવા પ્રયોજનથી પાર થઇ ચુકયા છે. તેમના સમસ્ત પ્રયો-જન સમાપ્ત થઇ ગયાં છે, તેથીજ તેઓ કૃતકૃત્ય થઇ ગયા છે એવા પણ જે અક્રમસિદ્ધો છે. તેમનો નિરાસ કરવા માટે તેઓને 'પરંપરાગત' કહ્યા છે અર્થાત્ સિદ્ધત્વના સમયથી બીજા સમયવર્તી હોય છે. અથવા પરંપરાગતનો અર્થ છે પોતાને યોગ્ય યથા સંભવ ચતુર્થ, ષષ્ઠ આદિ ગુણસ્થાનોને પાર કરીને સિદ્ધ થયેલા છે. તેના સિવાય તેઓ કર્મરૂપી કવચથી પૂર્ણપણે અને સદાને માટે મુક્ત થઈ ચુકેલા છે. તેથી અજર છે, કેમકે શરીરનો અભાવ હોવાથી જરાની સંભાવના જ થઈ શકતી નથી. સિદ્ધ અમર પણ છે, કેમકે આયુકર્મથી રહિત થઇ ગએલા છે. શરીર વિનાના હોવાથી પ્રાણ ત્યાગરૂપ

इति, असङ्गाः इति आभ्यन्तरबाह्यसङ्गवर्जिता इत्यर्थः, निच्छिन्न सव्वदुक्खा जाइजरामरणबंधणविमुक्का। अव्वावाहं सोक्खं अणुहोंति सासयं सिद्धा' ॥१६०॥ निस्तीर्णसर्वदुःखाः-निस्तीर्णं समुल्लङ्घितं सर्वदुःखं यैस्ते निस्तीर्णसर्वदुःखा, तत्र हेतुमाह-'जातिजरामरणबन्धनविप्रमुक्ताः तत्र जननं जातिः, जन्मेत्यर्थः; जरावयसो ह्रासरूपा, मरणं-प्राणत्यागरूपचरमप्राणशरीरसंयोगविरहः, बन्धनानि-भवबन्धननिबन्धनकर्माणि तैर्विशेषेण निःशेषापगमेन मुक्ताः-जातिजरामरणबन्धन-विमुक्ताः, तस्मात् निस्तीर्णसर्वदुःखा भवन्ति कारणाभावात् कार्याभावः, तद-नन्तरम्-अव्याबाधम्-अविद्यमाना विविधा आवाधा यस्मिन् तत् अव्याबाधम्, सौख्यम्-सुखम्, शाश्वतं सिद्धाः अनुभवन्ति इत्याशयः, 'अतुल सुह सागरगया, अव्वावाहे य णोवमं पत्ता। सव्वमणागयद्धं चिट्ठंति सुही सुखं पत्ता'। अतुल सुखसागरगता अव्याबाधे च नोपमं प्राप्ताः। सर्वमनागताद्धा तिष्ठन्ति सुखिनः सुखं प्राप्ताः' इत्येवं रूपाः सिद्धाः प्ररूपिता इति ॥सू० २९॥

इतिश्री विश्वविख्यात-जगद्वल्लभ-प्रसिद्धवाचकपञ्चदशभाषाकलितललित-
कलापालापकप्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक-वादिमानमर्दक-श्री-
शाहू छत्रपतिकोल्हापुरराजप्रदत्त-'जैनशास्त्राचार्य'-पदभूषित
कोल्हापुरराजगुरु-बालब्रह्मचारि जैनाचार्य जैनधर्मदिवाकर-
पूज्यश्री-घासीलाल-व्रतिविरचितायां श्री प्रज्ञापना
सूत्रस्य प्रमेयबोधिन्याख्यायां व्याख्यायां
द्वितीयं स्थानपदं समाप्तम् ॥२॥

॥ समाप्तोऽयं प्रज्ञापनायाः प्रथमो भागः ॥

---

प्राणों का त्याग मरण कहलाता है। देह के सद्भाव में ही ये दोनों होते हैं। जिसके शरीर ही नहीं उसके जरा और मरण नहीं हो सकते।' सिद्ध असंग हैं अर्थात् बाह्य और आभ्यन्तर संग से रहित हैं तथा समस्त दुःखों से रहित हो चुके हैं। इसका कारण यह है कि वे जन्म, जरा, मरण और बन्धन से मुक्त हो चुके हैं। क्यों कि सिद्ध

---

મરણનો અભાવ હોય છે. કહ્યું પણ છે-'વયસ્, (ઉમ્મર) ની હાનિ થવી તે જરા અને પ્રાણોનો ત્યાગ મરણ કહેવાય છે. દેહની હયાતીમાં આ બન્ને બને છે. જેને શરીર જ નથી તેને જરા, મરણ નથી થઈ શકતું. 'સિદ્ધ' અસંગ છે અર્થાત્ બાહ્ય અને આભ્યન્તર સંગથી રહિત છે તથા સમસ્ત દુઃખોથી રહિત થઈ ચુકેલા છે. તે કારણથી તેઓ જન્મ, જરા, મરણ અને બન્ધનથી

जन्म, जरा, मरण और बन्ध से मुक्त हो चुके हैं, इसी कारण समस्त दुःखों से रहित हो गए हैं, क्यों कि कारण के अभाव में कार्य का भी अभाव होता है। वे सब प्रकार की बाधा से रहित होकर शाश्वत सुख का अनुभव करते हैं।

सिद्ध भगवान् अतुल सुख को प्राप्त है, अनुपम अव्याबाध से युक्त हैं। वे सदा काल सुखी होकर रहते हैं।

**श्री जैनाचार्य जैनधर्मदिवाकर पूज्यश्री घासीलाल व्रतिविरचित प्रज्ञापनासूत्र की प्रमेयबोधिनी व्याख्या का द्वितीय स्थान पद समाप्त ॥२॥**

---

मुक्त थई गयेला छे. केमके कारणुना अभावमां कार्यनो पण अभाव थाय छे. तेओ बधा प्रकारनी पीडा रहित बनीने शाश्वत सुखनो अनुभव करता रहे छे. सिद्ध भगवान अतुल सुखने पामेला छे, अनुपम; अव्याबाधथी युक्त छे, तेओ सदाकाळ सुखी बनीने रहे छे.

श्री जैनाचार्य जैनधर्मदिवाकर पूज्यश्री घासीलाल व्रतिविरचित प्रज्ञापना सूत्रनी प्रमेयबोधिनी टीकानुं द्वितीय स्थानपद समाप्त ॥ १ ॥

